विस्तीर्णता कथयति स्वधियाऽम्बुराशे ?
।५। ये योगिनामपि न यान्ति गुणास्तवेश !,
वक्तु कथभवति तेषु ममावकाश ?। जाता
तदेवमसमीक्षितकारितेय, जल्पन्ति वा निज-
गिरा ननु पक्षिणोऽपि ।।६।। आस्तामचिन्त्य-
महिमा जिन ! सस्तवस्ते, नामापि पाति
भवतो भवतो जगन्ति । तीव्रातपोपहतपान्थ-
जनान्निदाघे, प्रीणाति पद्मसरस सरसोऽनि-
लोऽपि ।। ७ ।। हृद्वर्त्तिनि त्वयि विभो !
शिथिलीभवन्ति, जन्तो क्षणेन निविडा अपि
कर्मबन्धा । सद्यो भुजगममया इव मध्यभाग
मभ्यागते वनशिखण्डिनि चन्दनस्य ।।८।।
मुच्यन्त एव मनुजा सहसा जिनेन्द्र !, रौद्रै-
रुपद्रवशतैस्त्वयि वीक्षितेऽपि । गोस्वामिनि

स्फुरिततेजसि दृष्टमात्रे, चौरैरिवाशु पशवः प्रपलायमानैः ॥९॥ त्वं तारको जिन ! कथं भविनां ? त एव, त्वामुद्वहन्ति हृदयेन यदुत्तरन्तः । यद्वा दृतिस्तरति यज्जलमेष नूनमन्तर्गस्य मरुतः स किलानुभावः ॥१०॥ यस्मिन् हरप्रभृतयोऽपि हतप्रभावाः, सोऽपि त्वया रतिपतिः क्षपितः क्षणेन । विध्यापिता हुजभुजः पयसाऽथ येन पीतं न किं तदपि दुर्द्धरवाडवेन ? ॥११॥ स्वामिन्ननल्पगरिमाणमपि प्रपन्ना-स्त्वां जन्तवः कथमहो हृदये दधानाः। जन्मोदधिं लघु तरंतत्यतिलाघवेन? चिन्त्यो न हंत महतां यदि वा प्रभावः ।१२॥ क्रोधस्त्वया यदि विभो ! प्रथमं निरस्तो, ध्वस्तास्तदा बत कथं किल कर्मचौराः ? ।

प्लोषत्यमुत्र यदि वा शिशिराऽपि लोके, नीलद्रुमाणि विपिनानि न किं हिमानी ? ॥१३॥ त्वा योगिनो जिन ! सदा परमात्म-रूप-मन्वेषयति हृदयाम्बुजकोशदेशे । पूतस्य निर्मलरुचेर्यदि वा किमन्य-दक्षस्य सभवि पद ननु कर्णिकाया ? ॥१४॥ ध्यानाज्जिनेश ! भवतो भविन' क्षणेन, देह विहाय परमात्म-दशा व्रजन्ति । तीव्रानलादुपलभावमपास्य लोके, चामीकरत्वमचिरादिव धातुभेदा ॥१५॥ अत सदैव जिन ! यस्य विभाव्यसे त्व, भव्यै कथ तदपि नाशयसे शरीरम् ? । एतत्स्वरूपमथ मध्यविवर्तिनो हि, यद्विग्रह प्रशमयति महानुभावा ॥१६॥ आत्मा मनीषिभिरय त्वदभेदबुद्धया, ध्यातो जिनेन्द्र !

भवतीह भवत्प्रभावः । पानीयमप्यमृतमित्यनुचिंत्यमानं, किं नाम नो विषविकारमपाकरोति ? ॥१७॥ त्वामेव वीततमसं परवादिनोऽपि, नूनं विभो ! हरिहरादिधिया प्रपन्नाः । किं काचकामलिभिरीश ! सितोऽपि शङ्खो, नो गृह्यते ? विविधवर्णविपर्ययेण ॥१८॥ धर्मोपदेशसमये सविधानुभावादास्तां जनो भवति ते तरुरप्यशोकः । अभ्युद्गते दिनपतौ समहीरुहोऽपि, किं वा विबोधमुपयाति न जीवलोकः ?॥१९॥ चित्रं विभो ! कथमवाङ्मुखवृंतमेव, विष्वक् पतत्यविरला सुरपुष्पवृष्टिः ? । त्वद्गोचरे सुमनसां यदि वा मुनीश !, गच्छंति नूनमध एव हि बंधनानि ॥२०॥ स्थाने गभीरहृदयोदधिसंभवायाः,

पीयूषता तव गिर समुदीरयन्ति। पीत्वा यत परमसमदसगभाजो, भव्या व्रजति तरसाऽप्यजरामरत्वम् ॥ २१ ॥ स्वामिन्! सुदूरमवनम्य समुत्पततो, मन्ये वदति शुचय सुरचामरौघा.। येऽस्मै नतिं विदधते मुनि-पुंगवाय, ते नूनमूर्ध्वगतय. खलु शुद्धभावा ॥२२॥ श्याम गभीरगिरमुज्ज्वलहेमरत्न—सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम्। आलोकयति रभसेन नदतमुच्चै—श्चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥२३॥ उद्गच्छता तव शितिद्युतिमण्डलेन, लुप्तच्छदच्छविरशोकतरुर्बभूव। सान्निध्यतोऽपि यदि वा तव वीतराग!, नीरागता व्रजति को न सचेतनोऽपि? ॥२४॥ भो भो प्रमादमव-

धूय भजध्वमेन—मागत्य निर्वृतिपुरीं प्रति सार्थवाहम् । एतन्निवेदयति देव ! जगत्त्रयाय, मन्ये नदन्नभिनभ सुरदुन्दुभिस्ते ।। २५ ।। उद्योतितेषु भवता भुवनेषु नाथ!, तारान्वितो विधुरयं विहताधिकारः । मुक्ताकलापकलितोच्छ्वसितातपत्र—व्याजात्त्रिधा धृततनुर्ध्रुवमभ्युपेतः ।।२६।। स्वेन प्रपूरितजगत्त्रयपिण्डितेन, कांतिप्रतापयशसामिव सञ्चयेन । माणिक्यहेमरजतप्रविनिर्मितेन, सालत्रयेण भगवन्नभितोविभासि ।। २७ ।। दिव्यस्रजो जिन ! नमत्त्रिदशाधिपाना—मुत्सृज्य रत्नरचितानपि मौलिबंधान् । पादौ श्रयंति भवतो यदि वा परत्र, त्वत्संगमे सुमनसो न रमन्त एव ।।२८।। त्वं नाथ ! जन्मजलधेर्विपरां-

मुखोऽपि, यत्तारयस्यसुमतो निजपृष्ठ लग्नान्। युक्त हि पार्थिवनिपस्य सतस्तवैव, चित्र विभो ! यदसि कर्मविपाकशून्य ॥२९॥ विश्वेश्वरोऽपि जनपालक ! दुर्गतस्त्व, किंवाऽक्षरप्रकृतिरप्यलिपिस्त्वमीश ! । अज्ञानवत्यपि सदेव कथञ्चिदेव, ज्ञानं त्वयि स्फुरति विश्वविकाशहेतु ॥३०॥ प्राग्भारसम्भृतनभांसि रजांसि रोषादुत्थापितानि कमठेन शठेन यानि । छायापिऽतैस्तव न नाथ ! हता हताशो, ग्रस्तस्त्वमोभिरयमेव परं दुरात्मा ॥ ३१ ॥ यद्गर्ज्जदूर्जितघनौघमदभ्रभीम, भ्रश्यत्तडिन्मुसलमांसलघोरधारम् । दैत्येन मुक्तमथ दुस्तरवारि दध्रे, तेनैव तस्य जिन! दुस्तरवारिकृत्यम् ॥३२॥ ध्वस्तोर्ध्वकेशवि-

कृताकृतिमर्त्यमुण्ड-प्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः । प्रेतव्रजः प्रति भवंतमपीरितो यः, सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥ धन्यास्त एव भुवनाधिप ! ये त्रिसंध्य--माराधयंति विधिवद्विधुतान्यकृत्याः । भक्त्योल्लसत्पुलकपक्ष्मलदेहदेशाः, पादद्वयं तव विभो! भुवि जन्मभाजः ॥ ३४ ॥ अस्मिन्नपारभववारिनिधौ मुनीश ! मन्ये न मे श्रवणगोचरतां गतोऽसि । आकर्णिते तु तव गोत्रपवित्रमंत्रे, किं वा विपद्विषधरी सविधं समेति ? ॥३५॥ जन्मांतरेऽपि तव पाद युगं न देव !, मन्ये मया महितमीहितदानदक्षम् । तेनेह जन्मनि मुनीश ! पराभवानां, जातो निकेतन महं मथिताशयानाम् ॥३६॥ नूनं न मोहतिमि-

रावृतलोचनेन, पूर्वं विभो ! सकृदपि प्रविलो-
कितोऽसि । मर्माविधो विधुरयति हि माम-
नर्था , प्रोद्यत्प्रबधगतय. कथमन्यथैते ? ।३७।
आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि,
नून न चेतसि मया विधृतोऽसि भक्त्या ।
जातोऽस्मि तेन जनबान्धव ! दु खपात्र,
यस्मात्क्रिया प्रतिफलन्ति न भावशून्या
॥ ३८ ॥ त्व नाथ ! दु.खिजनवत्सल हे
शरण्य, कारुण्यपुण्यवसते वशिना वरेण्य ।
भक्त्या नते मयि महेश ! दया विधाय,
दु खाकुरोद्दलनतत्परता विधेहि ॥ ३९ ॥
नि सङ्ख्यसंख्य शरण शरण शरण्य-मासाद्य
सादितरिपुप्रथितावदातम् । त्वत्पादपङ्कजमपि
प्रणिधानवध्यो, वध्योऽस्मि चेद् भुवनपावन!

हा हतोऽस्मि ॥४०॥ देवेन्द्रवन्द्य ! विदिताखिलवस्तुसार !, संसारतारक विभो ! भुवनाधिनाथ । त्रायस्व देव ! करुणाहृद मां पुनीहि, सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥ यद्यस्ति नाथ ! भवदङ्घ्रिसरोरुहाणां, भक्तेः फलं किमपि संततसंचितायाः। तन्मे त्वदेकशरणस्य शरण्य भूयाः, स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ॥४२॥ इत्थं समाहितधियो विधिवज्जिनेन्द्र !, सान्द्रोल्लसत्पुलककञ्चुकितांगभांगाः। त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्षा, ये संस्तवं तव विभो ! रचयन्ति भव्याः ॥४३॥ जननयनकुमुदचन्द्रप्रभास्वराः स्वर्गसंपदो भुक्त्वा। ते विगलित-

मलनिचया, अचिरान्मोक्ष प्रपद्यन्ते ॥४४॥ युग्मम् ।

॥ इति श्री कल्याणमन्दिरस्तोत्र सपूर्णम् ॥



## ॥ अथ बृहद् शान्ति ॥

भो भो भव्या ! शृणुत वचन प्रस्तुत सर्व्वमेतत्, ये यात्राया त्रिभुवनगुरोरार्हताभक्तिभाज । तेषा शान्तिर्भवतु भवतामर्हदादिप्रभावा,–दारोग्य श्रीधृति—मतिकरी क्लेशविध्वस-हेतु ॥१॥ भो भो भव्यलोका इह हि भरतैरावत–विदेहसम्भवाना, समस्त–तीर्थकृता जन्मन्यासन-प्रकम्पानन्तर-मवधिना

विज्ञाय सौधर्माधिपतिः सुघोषाघण्टा-चालनानन्तरं सकल-सुरासुरेन्द्रैः सह समागत्य सविनयमर्हद्भट्टारकं गृहीत्वा गत्वा कनकाद्रिशृंगे विहितजन्माभिषेकः शान्ति-मुद्घोषयति, ततोऽहं कृता नुकारमिति कृत्वा—'महाजनो येन गतः स पंथाः' इति भव्य जनैः सह समागत्य, स्नात्रपीठे स्नात्रं विधाय शान्तिमुद्घोषयामि । तत्पूजायात्रा-स्नात्रादि-महोत्सवानन्तरम्, इति कृत्वा कर्णं दत्त्वा निशम्यतां २ स्वाहा ।। ॐ पुण्याहं २, प्रीयन्तां २, भगवन्तोऽर्हन्तः सर्वज्ञाः, सर्वदर्शिनः त्रैलोक्यनाथाः त्रैलोक्य महिताः, त्रैलोक्य-पूज्याः, त्रैलोक्येश्वराः, त्रैलोक्योद्योतकराः ।। ॐ श्री केवलज्ञानी १, निर्वाणी २, सागर ३,

महायश ४, विमल ५, सर्वानुभूति ६, श्रीधर ७, दत्त ८, दामोदर ६, सुतेज १०, स्वामी ११, मुनिसुव्रत १२, सुमति १३, शिवगति १४, अस्ताघ १५, नमीश्वर १६, अनिल १७, यशोधर १८, कृतार्थ १६, जिनेश्वर २०, शुद्धमति २१, शिवकर २२, स्यन्दन २३, सप्रति २४ एते अतीतचतुर्विशति-तीर्थंकरा ॥

ॐ श्रीऋषभ १, अजित २, सम्भव ३, अभिनन्दन ४, सुमति ५, पद्मप्रभ ६, सुपार्श्व ७, चन्द्रप्रभ ८, सुविधि ६, शीतल १०, श्रेयास ११, वासुपूज्य १२, विमल १३, अनन्त १४, धर्म १५, शान्ति १६, कुन्थु १७, अर १८, मल्लि १६, मुनिसुव्रत २०, नमि

वर्त्तमान-जिनजनन्यः ॥

ॐ श्री गोमुख १, महायक्ष २, त्रिमुख ३, यक्षनायक ४, तुम्बुरु ५, कुसुम ६, मातंग ७, विजय ८, अजित ९, ब्रह्मा १०, यक्षराज ११, कुमार १२, षण्मुख १३, पाताल १४, किन्नर १५, गरुड १६, गन्धर्व १७, यक्षराज १८, कुबेर १९, वरुण २०, भृकुटी २१, गोमेध २२. पार्श्व २३, ब्रह्मशान्ति २४, इति वर्त्तमानजिनाःयक्षाः ॥

ॐ चक्रेश्वरी १, अजितबला २, दुरितारि ३, काली ४, महाकाली ५, श्यामा ६, शान्ता ७, भृकुटि ८, सुतारका ९, अशोका १०, मानवी ११, चण्डा १२, विदिता १३, अंकुशा १४, कन्दर्पा १५, निर्वाणी १६, बला

१७, धारिणी १८, धरणप्रिया १९, नरदत्ता २०, गान्धारी २१, अम्बिका २२, पद्मावती २३, सिद्धायिका २४, इति वर्त्तमान–चतुर्विंशतितीर्थंकर-शासनदेव्या ।

ॐ ह्रीं श्रीं धृति-कीर्ति-कान्ति-बुद्धि-लक्ष्मी–मेधा–विद्या-साधन–प्रवेश-निवेशनेषु सुगृहीतनामानो जयन्ति ते जिनेन्द्रा. । ॐ रोहिणी १, प्रज्ञप्ति २, वज्रशृंखला ३, वज्रांकुशा ४, चक्रेश्वरी ५, पुरुषदत्ता ६, काली ७, महाकाली ८, गौरी ९, गान्धारी १०, सर्वास्त्रमहाज्वाला ११, मानवी १२, वैरोट्या १३, अच्छुप्ता १४, मानसी १५, महामानसी १६, एता षोडश विद्यादेव्यो रक्षन्तु मे स्वाहा ॥ ॐ आचार्योपाध्याय-

प्रभृति चातुर्वर्ण्यस्य श्रीश्रमण-संघस्य शान्ति-र्भवतु तुष्टिर्भवतु पुष्टिर्भवतु। ॐग्रहाश्चंद्र-सूर्याऽगारकबुध-बृहस्पति-शुक्र- शनैश्चर-राहु-केतु-सहिताः सलोकपाला सोम-यम-वरुण-कुबेर-वासवादित्य स्कन्द-विनायका ये चान्येऽपि ग्राम-नगर-क्षेत्रदेवतादयस्ते सर्वे प्रीयन्तां २ अक्षीण-कोश-कोष्ठागारा नरपतयश्च भवन्तु स्वाहा ।। ॐ पुत्रमित्रभ्रातृ-कलत्र-सुहृत्-स्वजन-संबन्धि-बन्धु-वर्गसहितानित्यं चामोद-प्रमोद-कारिणो भवन्तु । अस्मिञ्च भूमण्डले आयतन-निवासिनां साधु-साध्वी-श्रावक-श्राविकाणां रोगोपसर्ग-व्याधि-दुःख-दुर्भिक्ष-दौर्मन-स्योपशमनाय शान्तिर्भवतु।। ॐ तुष्टि-ऋद्धिवृद्धि-मांगल्योत्सवा भवन्तु । सदा

प्रादुर्भूतानि दुरितानि पापानि शाम्यन्तु, शत्रव पराङ्मुखा भवन्तु स्वाहा ।। श्रीमते शान्तिनाथाय नम शान्तिविधायिने । त्रैलोक्य-श्यामराधीश मुकुटाभ्यर्चिताघ्रये ।।१।। शान्ति शान्तिकर श्रीमान् शान्ति दिशतु मे गुरु शान्तिरेव सदा तेषा येषा शान्तिर्गृहे गृहे ।।२।। ॐ उन्मृष्टरिष्ट–दुष्ट–ग्रह–गति दु स्वप्न-दुर्निमित्तादि । सपादित-हित-सपद् नाम-ग्रहण जयति शान्ते ।।३।। श्रीसघ-पौर जन-पद,–राजाधिप–राजसन्निवे–शानाम् । गोष्ठिक–पुरमुख्याणा, व्याहरणैर्व्याहिरेच्छान्तिम् ।।४।। श्री श्रमणसघस्य शान्तिर्भवतु, श्रीपौर–लोकस्य शान्तिर्भवतु, श्री जन पदाना शान्तिर्भवतु, श्रीराजाधिपाना

शान्तिर्भवतु, श्रीराज संनिवेशानां शान्तिर्भवतु, श्रीगोष्ठिकानाम् शान्तिर्भवतु । ॐ स्वाहा २ ॐ ह्रीं श्रीं पार्श्वनाथाय स्वाहा । एषा शान्तिः प्रतिष्ठा-यात्रा-स्नात्रावसानेषु शान्तिकलशं गृहीत्वा कुंकुम-चन्दन-कर्पूरागुरु-धूप-वास कुसुमाञ्जलि-समेतः स्नात्रपीठे श्री संघसमेतः शुचिः शुचिवपुः पुष्पवस्त्र-चन्दनाभरणालंकृतः, चन्दनतिलकं विधाय पुष्प मालां कण्ठे कृत्वा शान्तिमुद्घोषयित्वा शान्ति-पानीयं मस्तके दातव्यमिति । नृत्यन्ति नृत्यं मणिपुष्प-वर्षं, सृजन्ति गायन्ति च मंगलानि । स्तोत्राणि गोत्राणि पठन्ति मन्त्रान्, कल्याणभाजो हि जिनाभिषेके ।। १ ।। अहं तित्थयर-माया, सिवादेवी तुम्ह-नयर-निवा-

सिनी अम्ह सिव तुम्ह सिव, असुहोवसम सिवं भवतु स्वाहा ॥ २ ॥ शिवमस्तु सर्व-जगत', परहित-निरता भवन्तु भूत-गणा । दोषा प्रयान्तु नाश, सर्वत्र सुखीभवतु लोका ॥३॥ उपसर्गा. क्षय यान्ति, छिद्यन्ते विघ्न-वल्लयः । मन प्रसन्नतामेति पूज्यमाने जिनेश्वरे ॥ ४ ॥ सर्वमगलमागल्य सर्वकल्याण-कारणम् । प्रधान सर्वधर्माणा जैन जयति शासनम् ॥५॥

॥ इति वृहद्शान्ति समाप्त ॥



## ॥ अथ जिनपञ्जर स्तोत्रम् ॥

॥ ॐ ह्रीं श्रीं अर्हं अर्हद्‍भ्यो नमोनम । ॐ ह्रीं श्रीं अर्हं सिद्धेभ्यो नमोनम । ॐ ह्रीं श्रीं

अर्हं आचार्येभ्यो नमोनमः। ॐ ह्रीं श्रीं अर्हं उपाध्यायेभ्यो नमोनमः। ॐ ह्रीं श्रीं अर्हं श्री गौतमस्वामिप्रमुखसर्वसाधुभ्यो नमोनमः ॥१॥ एष पंच-नमस्कारः, सर्व-पापक्षयंकरः। मंगलानां च सर्वेषां, प्रथमं भवति मंगलम् ॥२॥ ॐ ह्रीं श्रीं जये विजये, अर्हं परमात्मने नमः। कमल-प्रभ-सूरीन्द्रो, भाषते जिनपञ्जरम् ।३। एकभक्तोपवासेन, त्रिकालं यः पठेदिदम्। मनोऽभिलषितं सर्वं, फलं स लभते ध्रुवम् ॥ ४ ॥ भूशय्याब्रह्मचर्य्येण, क्रोधलोभविवर्जितः। देवताग्रे पवित्रात्मा, षण्मासैर्लभते फलम् ॥ ५ ॥ अर्हंतं स्थापयेन् मूर्ध्नि, सिद्धं चक्षुर्ललाटके। आचार्यं श्रोत्रयोर्मध्ये, उपाध्यायं तु घ्राणके ॥६॥ साधुवृन्दं

मुखस्याग्रे, मन' शुद्ध विधाय च । सूर्य-चन्द्र-निरोधेन, सुधी सर्वार्थसिद्धये ॥७॥ दक्षिणे मदन-द्वेषी, वाम-पार्श्वे स्थितो जिन । अग-सधिषु सर्वज्ञ , परमेष्ठी शिवङ्कर ॥ ८ ॥ पूर्वाशा श्री जिनो रक्षे,-दाग्नेयीं विजितेन्द्रिय । दक्षिणाशा पर ब्रह्म, नैर्ऋतीं च त्रिकालवित् ॥९॥ पश्चिमाशा जगन्नाथो, वायवीं परमेश्वर । उत्तरा तीर्थकृत् सर्वामीशानीं च निरजन' ।१०। पाताल भगवानर्हन्नाकाशं पुरुषोत्तम । रोहिणीप्रमुखा देव्यो, रक्षन्तु सकल कुलम् ॥११॥ ऋषभो मस्तकं रक्षे-दजितोऽपि विलोचने । सभव कर्ण-युगलं, नासिका चाभिनन्दन ॥१२॥ ओष्ठौ श्रीसुमती रक्षेद्, दन्तान् पद्मप्रभो विभु जिह्वा सुपार्श्वदेवोऽय,

तालु चन्द्रप्रभो विभुः ॥१३॥ कण्ठं श्रीसुविधि रक्षेद्, हृदयं श्रीसुशीतलः । श्रेयांसो बाहु-युगलं, वासुपूज्यः कर-द्वयम् ॥१४॥ अंगुलीर्विमलो रक्षेद्, अनन्तोऽसौ स्तनावपि । सुधर्मोऽप्युदरास्थीनि, श्रीशान्तिर्नाभि–मण्डलम् ॥१५॥ श्रीकुन्थुर्गुह्यकं रक्षे,-दरो रोम-कटी-तटम् । मल्लिरूरू पृष्ठवंशं, जंघे च मुनिसुव्रतः ॥१६॥ पादाङ्गुलीर्नमी रक्षेत्, श्रीनेमिश्चरणद्वयम् । श्रीपार्श्वनाथः सर्वांगं, वर्धमानश्चिदात्मकम् ॥ १७ ॥ पृथि-वीजलतेजस्क,-वाय्वाकाशमयं जगत् । रक्षेदशेष-पापेभ्यो, वीतरागो निरंजनः ॥१८॥ राजद्वारे स्मशाने वा, संग्रामे शत्रुसंकटे । व्याघ्रचोराग्नि–सर्पादि-भूत-प्रेत-भयाश्रिते ॥१९॥ अकाल-

मरण-प्राप्ते, दारिद्र्यापत्समाश्रिते । अपु-
त्रत्वे महादोषे, मूर्खत्वे रोगपीडिते ॥२०॥
डाकिनी-शाकिनी-ग्रस्ते, महा-ग्रहगणार्दिते ।
नद्युत्तारेऽध्व-वैषम्ये, व्यसने चापदि स्मरेत्
॥२१॥ प्रातरेव समुत्थाय, य. स्मरेज्जिन-
पञ्जरम् । तस्य किञ्चिद्भयं नास्ति, लभते
सुखसम्पदम् ॥ २२ ॥ जिनपञ्जरनामेद, य
स्मरत्यनुवासरम् । कमलप्रभराजेन्द्र, श्रिय
स लभते नर ॥२३॥ प्रात समुत्थाय पठेत्
कृतज्ञो, य. स्तोत्रमेतज्जिनपञ्जराख्यम् ।
आसादयेत्स कमलप्रभाख्यां, लक्ष्मीं मनोवा-
ञ्छित पूरणाय ॥२४॥ श्रीरुद्रपल्लीय-वरेण्य-
गच्छे, देवप्रभाचार्य-पदाब्जहंस । वादीन्द्र-

चूडामणिरेष जैनो जीयाद् गुरुः श्रीकमल-
प्रभाख्यः ।। २५ ।।

।। इति श्रीजिनपंजर-स्तोत्रं संपूर्णम् ।।



## ।। अथ श्रीऋषिमण्डल स्तोत्रम् ।।

आद्यन्ताक्षर-संलक्ष्य,-मक्षरं व्याप्य यत् स्थितम् । अग्नि-ज्वाला-समं नाद-बिन्दु रेखा-समन्वितम् ।।१।। अग्नि-ज्वाला समाक्रान्त, मनोमल-विशोधकम् । देदीप्यमानं हृत्पद्मे, तत्पदं नौमि निर्मलम् ।। २ ।। अर्हमित्यक्षरं ब्रह्मवाचकं परमेष्ठिनः। सिद्धचक्रस्य सद्बीजं, सर्वतः प्रणिदध्महे ।।३।। ॐ नमोऽर्हभ्य ईशेभ्य ॐ सिद्धेभ्यो नमोनमः । ॐ नमः सर्व-

सूरिभ्य उपाध्यायेभ्य ॐ नम ।।४।। ॐ नम. सर्वसाधुभ्य ॐ ज्ञानेभ्यो नमोनम । ॐ नमस्तत्त्वदृष्टिभ्यश्चारित्रेभ्यस्तु ॐ नमः ।।५।। श्रेयसेस्तु श्रियेस्त्वे-तदर्हदाद्यष्टक शुभम् । स्थानेष्वष्ट सुविन्यस्त, पृथग्बीजसमन्वितम् ।। ६ ।। आद्य पद शिखा रक्षेत्, पर रक्षेत्तु मस्तकम् । तृतीय रक्षेन्नेत्रे द्वे, तुर्यरक्षेच्चनासिकाम् ।।७।। पचम तु मुख रक्षेत्, षष्ठरक्षेच्च घण्टिकाम्। नाभ्यन्त सप्तम रक्षेद, रक्षेत् पादान्तमष्टमम् ।। ८ ।। पूर्व-प्रणवत सान्त' सरेफो द्व्यब्धिपञ्चषान् । सप्ताष्टदशसूर्याङ्कान्, श्रितो विन्दुस्वरान् पृथक् ।। ९ ।। पूज्यनामाक्षरा आद्या , पचैते ज्ञानदर्शने–चारित्रेभ्यो नमो मध्ये, ह्रीँ सान्तसमलकृत' ।।१०।। ॐ ह्राँ ।

ह्रीं । ह्रुँ । ह्रूँ । ह्रेँ । ह्रैँ । ह्रौँ । ह्रः । असिआउसासम्यक्ज्ञानदर्शनचारित्रेभ्यो ह्रीं नमः । जम्बू-वृक्षधरो द्वीपः, क्षारोदधिसमावृतः । अर्हदाद्यष्टकैरष्टकाष्ठाधिष्ठैरलंकृतः ।११। तन्मध्य-संगतो मेरुः, कूटलक्षैरलंकृतः । उच्चै रुच्चै स्तरस्तार, स्तारामण्डलमण्डितः ॥१२॥ तस्योपरि सकारान्तं, बीजमध्यास्य सर्वगम् । नमामि बिम्बमार्हन्त्यं, ललाटस्थं निरंजनम् ॥१३॥ अक्षयं निर्मलं शान्तं, बहुलं जडतोज्झितम् । निरीहं निरहङ्कारं, सारं सारतरं घनम् ॥१४॥ अनुद्धतं शुभं स्फीतं, सात्त्विकं राजसं मतम् । तामसं चिरसंबुद्धं, तैजसं सर्वरीसमम् ॥१५॥ साकारं च निराकारं, सरसं विरसं परम् । परापरं परातीतं,

परपरपरापरम् ॥१६॥ एकवर्णं द्विवर्णं च त्रिवर्णं तुर्यवर्णकम् । पञ्चवर्णं महावर्णं, सपर च परापरं ॥१७॥ सकल निष्कल तुष्टं, निर्वृतं भ्रान्तिर्वाजतम् । निरजन निराकार, निर्लेप वीतसश्रयम् ।१८। ईश्वर ब्रह्मसबुद्ध, वुद्ध, सिद्ध मत गुरुम् । ज्योतीरूप महादेव, लोकालोकप्रकाशकम् ॥ १६ ॥ अर्हदाख्यस्तु वर्णान्त , सरेफो बिन्दुमण्डित । तुर्य-स्वर-समायुक्तो, वहुधा नादमालित ॥ २० ॥ अस्मिन् वीजे स्थिता· सर्वे, वृषभाद्या निजोत्तमा । वर्णैर्निजैर्निजैर्युक्ता, ध्यातव्यास्तत्र सगता. ॥२१॥ नादश्चन्द्र-समाकारो, बिन्दुर्नीलसमप्रभ । कलारुण-समासान्त स्वर्णाभ सर्वतोमुख ॥ २२ ॥ शिर सलीन ईकारो,

विनीलो वर्णतः स्मृतः। वर्णानुसार-संलीनं, तीर्थकृन्मण्डलं स्तुमः ॥२३॥ चन्द्रप्रभ-पुष्पदन्तौ, नादस्थिति-समाश्रितौ। बिन्दुमध्यगतौ नेमि, सुव्रतौ जिनसत्तमौ ॥ २४ ॥ पद्मप्रभ-वासुपूज्यौ, कलापदमधिष्टितौ। शिर-ई-स्थितिसंलीनौ, पार्श्व-मल्ली-जिनेश्वरौ ॥२५॥ शेषास्तीर्थकृतः सर्वे, हरस्थाने नियोजिताः। माया बीजाक्षरंप्राप्ता,—श्चतुर्विशतिरर्हताम् ॥२६॥ गत-राग-द्वेष-मोहाः, सर्व-पाप-विवर्जिताः। सर्वदा सर्वकालेषु, ते भवन्तु जिनोत्तमाः ॥२७॥ देवदेवस्य यच्चक्रं, तस्य चक्रस्य या विभा। तयाच्छादितसर्वाङ्गं, मा मां हिनस्तु डाकिनी ॥ २८ ॥ देवदे० मा मां हिनस्तु राकिनी ॥ २९ ॥ देवदे० मा मां

हिनस्तु लाकिनी ॥ ३० ॥ देवदे० मा मा
हिनस्तु काकिनी ॥ ३१ ॥ देवदे० मा मा
हिनस्तु शाकिनी ॥ ३२ ॥ देवदे० मा मा
हिनस्तु हाकिनी ॥ ३३ ॥ देवदे० मा मा
हिनस्तु याकिनी ॥ ३४ ॥ देवदे० मा मा
हिंसन्तु पन्नगा. ॥ ३५ ॥ देवदे० मा मा
हिंसन्तु हस्तिन ॥ ३६ ॥ देवदे० मा मा
हिंसन्तु राक्षसा ॥ ३७ ॥ देवदे० मा मा
हिंसन्तु वह्नय ॥ ३८ ॥ देवदे० मा मा
हिंसन्तु सिंहका ॥ ३९ ॥ देवदे० मा मा
हिंसन्तु दुर्जना ॥ ४० ॥ देवदे० मा मा
हिंसन्तु भूमिपा. ॥ ४१ ॥ श्री गौतमस्य या मुद्रा, तस्या या भुवि लब्धय । ताभिरभ्युद्यत-ज्योतिरर्ह सर्वनिधीश्वर. ।४२। पाताल-

वासिनो देवा, देवा भूपीठवासिनः । स्ववर्वासिनोऽपि ये देवाः, सर्वे रक्षन्तु मामितः ॥ ४३ ॥ येऽवधिलब्धयो ये तु, परमावधिलब्धयः । ते सर्वे मुनयो देवा, मां संरक्षन्तु सर्वदा ॥४४॥ दुर्जना भूतवेतालाः, पिशाचा मुद्गलास्तथा । ते सर्वेऽप्युपशाम्यन्तु, देवदेवप्रभावतः ॥४५॥ ॐ ह्रीं श्रीश्च धृतिर्लक्ष्मी गौरी चण्डी सरस्वती । जयाम्बा विजया नित्या क्लिन्ना जिता मद-द्रवा ।४६। कामांगा कामबाणा च, सानन्दा नन्दमालिनी । माया मायाविनी रौद्री, कला काली कलिप्रिया ॥ ४७ ॥ एताः सर्वा महादेव्यो, वर्त्तन्ते या जगत्त्रये । मह्यं सर्वाः प्रयच्छन्तु, कान्ति कीर्त्ति धृतिं मतिम् ॥ ४८ ॥ दिव्यो गोप्यः

सुदुष्प्राप्य , श्रीऋषिमण्डलस्तव । भाषित-
स्तीर्थनाथेन, जगत्त्राणकृतेऽनघ ।। ४६ ।।
रणे राजकुले वह्नौ, जले दुर्गे गजे हरौ ।
स्मशाने विपिने घोरे, स्मृतो रक्षति मानवम्
।।५०।। राज्य-भ्रष्टा निज राज्य, पदभ्रष्टा
निज पदम् । लक्ष्मी-भ्रष्टा निजा लक्ष्मीं,
प्राप्नुवन्ति न सशय ।।५१।। भार्यार्थी लभते
भार्यां, पुत्रार्थी लभते सुतम् । वित्तार्थी लभते
वित्त, नर स्मरण-मात्रत ।। ५२ ।। स्वर्णे
रूप्ये पटे कास्ये, लिखित्वा यस्तु पूजयेत् ।
तस्येवाष्टमहासिद्धिर्गृहे, वसति शाश्वती
।।५३।। भूर्जपत्रे लिखित्वेद, गलके मूर्ध्नि वा
भुजे । धारित सर्वदा दिव्य, सर्व-भीति-विना-
शकम् ।। ५४ ।। भूतै प्रेतैर्ग्रहैर्यक्षै , पिशाचै-

मुद्गलैः खलैः। वात-पित्तकफोद्रेकैर्मुच्यते
नात्र संशयः ॥ ५५ ॥ भूर्भुवःस्वस्त्रयोपीठ-
वर्त्तिनः शाश्वता जिनाः। तैः स्तुतैर्वन्दितै-
र्दृष्टैर्यत् फलं तत्फलं श्रुतौ॥५६॥ एतद्गोप्यं
महास्तोत्रं, न देयं यस्य कस्यचित्। मिथ्या-
त्ववासिने दत्ते, बालहत्या पदे पदे ॥५७॥
आचाम्लादि तपः कृत्वा, पूजयित्वा जिना-
वलीम्। अष्टसाहस्रिको जापः कार्यस्तत्सि-
द्धिहेतवे ॥५८॥ शतमष्टोत्तरं प्रातर्ये पठन्ति
दिने दिने। तेषां न व्याधयो देहे, प्रभवन्ति
न चापदः ॥ ५९ ॥ अष्टमासावधिं यावत्,
प्रातः प्रातस्तु यः पठेत्। स्तोत्रमेतद् महा-
तेजो, जिनबिम्बं स पश्यति ॥ ६० ॥ दृष्टे
सत्यर्हतो बिम्बे, भवे सप्तके ध्रुवम्। पदं

प्राप्नोति शुद्धात्मा, परमानन्दनन्दित ।६१। विश्व-वन्द्यो भवेद् ध्याता, कल्याणानि च सोऽश्नुते । गत्वा स्थानं परं सोऽपि, भूयस्तु न निवर्त्तते ॥ ६२ ॥ इद स्तोत्र महास्तोत्र स्तुतीनामुत्तमं परम् । पठनात्स्मरणाज्ञापा- ल्लभ्यते पदमुत्तमम् ॥६३॥



## ॥ श्री महावीराय नमः ॥
## अथ लघुजिनसहस्रनाम प्रारभः

नमस्त्रिलोकनाथाय, सर्वज्ञाय महात्मने । वक्ष्ये तस्यैव नामानि, मोक्षसौख्याभिलापया ॥ १ ॥ निर्मल शाश्वत शुद्धो, निर्विकल्पो निरामय । नि शरीरी निरातङ्क, सिद्ध-

सूक्ष्मो निरंजनः ।।२।। निष्कलंको निरालंबो, निर्मोहो निर्मलोत्तमः । निर्भयो निरहंकारो, निर्विकारोऽथ निष्क्रियः ।३। निर्दोषी नीरुजः शान्तो, निर्भेद्यो निर्ममः शिवः । निस्तरंगो निराकारो, निष्कर्मा निष्कलः प्रभुः ।। ४ ।। निर्वादोऽनुपमज्ञानो, नीरागो निरघो जिनः । निःशब्दः प्रतिमश्लेष्ठ, उत्कृष्टो ज्ञानगोचरः ।।५।। निःसंगात्प्राप्तकैवल्यो, नैष्ठिकः शब्दवर्जितः । अनिंद्यो महपूतात्मा, जगच्छिखरशेखरः ।।६।। निःशब्दो गुणसंपन्नः पापतापप्रणाशनः । सोऽपि योगाच्छुभं प्रातः, कर्मद्योतिबलावहः ।।७।। अजरश्चामरः सिद्ध, स्त्वचितश्च क्षयो विभुः । अमूर्त्तस्त्वच्युतो ब्रह्म, विष्णुरीशः प्रजापतिः ।।८।। विश्वनाथस्त्व-

गिद्यश्चा, जननोऽनुपमो भव. । अप्रमेयो जगन्नाथो, बोधरूपो जिनात्मक ॥९॥ अव्यय. सकलाराध्यो, निष्पन्नो ज्ञानलोचन । अच्छेद्यो निर्मलो नित्य , सर्वशल्यविवर्जित ॥ १० ॥ अजेय सर्वतोभद्रो, निष्कषायो भवान्तक । विश्वनाथ. स्वयबुद्धो, वीतरागो जिनेश्वर ॥ ११ ॥ अतक. सहजानन्द, स्त्ववाड् मनसगोचर । असाध्य· शुद्धश्चैतन्याऽकर्मण्यो-फर्मवर्जित ॥ १२ ॥ अनन्तो विमलज्ञानी, निस्पृहो निष्प्रकाशक । कर्माजितो महात्मा च लोकत्रयशिरोमणि ॥१३॥ अव्याबाधो वर शभुर्विश्ववेदी पितामह । सर्वभूतहितो देव., सर्वलोकशरण्यक. ॥१४॥ आनन्दरूपश्चैतन्यो भगवास्त्रिगद्गुरु । अनतानतधी-

शक्तिः, सत्यव्यक्तोऽव्ययात्मकः ॥ १५ ॥ अष्टकर्मविनिर्मुक्तः, सप्तधातुविवर्जितः । गौरवादित्रयाद्दूरः, सर्वज्ञानादिसंयुतः ।१६। अभयः प्राप्तकैवल्यो, निर्मानो निरपेक्षकः । निष्कलः केवल ज्ञानी, मुक्तिसौख्यप्रदायकः ॥१७॥ अनामयो महाराध्यो, वरदो ज्ञान-पावकः । सर्वेशः सत्सुखावासो, जिनेन्द्रो मुनि-संस्तुतः ॥१८॥ अन्यूनः परमज्ञानी, विश्व-तत्त्वप्रकाशकः । प्रबुद्धो भगवन्नाथः प्रस्तुतः पुण्यकारकः ॥ १९ ॥ शंकरः सुगतो रौद्रः, सर्वज्ञोमदनांतकः । ईश्वरो भुवनाधीशः, सच्चित्तः पुरुषोत्तमः ॥ २० ॥ सद्योजात-महात्मा च विमुक्तो मुक्तिवल्लभः । योगीन्द्रो-ऽनादिसंसिद्धो, निरीहो ज्ञानगोचरः ॥२१॥

सदाशिवश्चतुर्वक्त्र , सत्सौख्यस्त्रिपुरान्तक· । त्रिनेत्रस्त्रिजगत्पूज्य , कल्याणकोष्टमूर्तिक ॥२२॥ सर्वसाधुजनैर्वन्द्य सर्वपापविवर्जित सर्वदेवाधिको देव सर्वभूतहितकर ॥२३॥ स्वयविद्यो महात्मा च, प्रसिद्ध· पापनाशन । तनुमात्रचिदानद, श्चैतन्य श्चैत्यवैभव ॥ २४ ॥ सकलातिशयो देवो, मुक्तिस्थो महतामह । मुक्तिकार्याय सतुष्टो, नीरोग परमेश्वर ॥ २५ ॥ महादेवो, महावीरो, महामोहविनाशक । महाभावो महादर्शो, महामुक्तिप्रदायक ॥२६॥ महाज्ञानी महायोगी, महातपो महात्मक । महर्द्धिको महावीर्यो, महान्तिकपदस्थित· ।२७। महापूज्यो महावंद्यो, महाविघ्नविनाशकः । महासौख्यो

महापुंसो, महामहिम अच्युतः ।।२८।। मुक्तो-
मुक्तिजसंबोध, एकोऽनेको विनिश्चलः । सर्व-
बंधविनिर्मुक्तः सर्वलोकप्रधानकः ।। २९ ।।
महाशूरो महाधीरो, महादुःखविनाशकः ।
महामुक्तिप्रदो धीरो, महाहृद्यो महागुरुः
।। ३० ।। निर्मारो मारविध्वंसो निष्कामो
विषयच्युतः । भगवांश्चमहाभ्रांतः, शांन्ति-
कल्याणकारकः ।। ३१ ।। परमात्मा परं-
ज्योतिः, परमेष्ठीपरेश्वरः । परमात्मा परा-
नन्द, परश्च परमात्मकः ।।३२।। प्रस्तुतानंत-
विज्ञानी, सौख्यनिर्वाणसंयुतः । नाकृतिरक्षरो
वर्णो, व्योमरूपो जितात्मकः ।।३३।। व्यक्तो-
ऽव्यक्तजसंबुद्धः, संसारच्छेदकारणः । निर-
वद्यो महाराध्यः, कर्मजिद्धर्मनायकः ।।३४।।

बोधिसत्वो जगद्वन्द्यो, विश्वात्मा नरकातक । स्वयमू पापहृत्पूज्य , पुनीतो विभवः स्तुत ॥ ३५ ॥ वर्णातीतो महातीतो, रूपातीतो निरजन । अनतज्ञानसपूर्णो, देवदेवेशनायक ॥३६॥ वरेण्यो भवविध्वसी, योगिनाज्ञानगोचर. जन्ममृत्युजरातीत', सर्वविघ्नहरो हर ॥ ३७ ॥ विश्वदृग्भव्यसवध , पवित्रो गुणसागर । प्रसन्न परमाराघ्यो, लोकालोकप्रकाशक ॥३८॥ रत्नगर्भो जगत्स्वामी, शक्रवद्य सुरार्चित । निष्प्रपचो निरातको, नि शेपक्लेशनाशक ॥३९॥ लोकेशो लोकससेव्यो, लोकालोकविलोकिन । लोकोत्तमस्त्रिलोकेशो, लोकाग्रशिखरस्थित ॥४०॥ नामाष्टकसहस्राणि ये पठन्ति पुन पुन. । ते

निर्वाणपदं यांति, प्राणिनो नात्र संशयः
॥ ४१ ॥

इति श्रीभद्रबाहुस्वामिविरचितं लघुजिनसहस्रनाम स्तोत्रं सम्पूर्णम् ॥



## ॥ श्रीमन्त्राधिराजस्तोत्रम् ॥

श्रीपार्श्वः पातु वो नित्यं, जिनः परम-
शङ्करः । नाथः परमशक्तिश्च, शरण्यः सर्व-
कामदः ॥ १ ॥ सर्वविघ्नहरः स्वामी सर्व-
सिद्धिप्रदायकः। सर्वसत्वहितो योगी, श्रीकरः
परमार्थदः ॥२॥ देवदेवः स्वयंसिद्धश्चिदा-
नन्दमयः शिवः । परमात्मा परब्रह्म, परमः
परमेश्वरः ॥३॥ जगन्नाथ सुरज्येष्ठो, भूतेशः

पुरुषोत्तम । सुरेन्द्रो नित्यधर्मश्च, श्रीनिवास शुभार्णव ॥ ४ ॥ सर्वज्ञ. सर्वदेवेश: सर्वद: सर्वगोत्तम । सर्वात्मा सर्वदर्शी च, सर्वव्यापी जगद्गुरु ॥ ५ ॥ तत्त्वमूर्ति परादित्य:, परब्रह्म प्रकाशक । परमेन्दु परप्राण: परमामृतसिद्धिद: ॥ ६ ॥ अज. सनातन: शम्भु-रीश्वरश्च सदाशिव. । विश्वेश्वर: प्रमोदात्मा, क्षेत्राधीश. शुभप्रद ॥७॥ साकारश्च निराकार, सकलो निष्कलोऽव्यय । निर्ममो निर्विकारश्च, निर्विकल्पो निरामय: ॥ ८ ॥ अमरश्चाजरोऽनन्त, एकोऽनन्त शिवात्मक । अलक्ष्यश्चैव चामेयो, ध्यानलक्ष्यो निरजन ॥९॥ ॐकाराकृतिरव्यक्तो, व्यक्तरूपस्त्रयीमय । ब्रह्मद्वयप्रकाशात्मा,

## ।। अथ आत्मरक्षास्तोत्रं ।।

ॐ परमेष्ठी नमस्कारं सारं नवपदात्मकं। आत्मरक्षाकरं वज्रपिंजराभं स्मराम्यहम् ।।१।। ॐ नमो अरिहंताणं शिरस्कं शिरसि-स्थितं। ॐ नमोसिद्धसिद्धाणं मुखे मुखपटंबरं ।। २ ।। ॐ नमो आयरियाणं अंगरक्षाति-शायिनी। ॐ नमो उवझायाणं आयुधं हस्त-योर्द्दढं ।। ३ ।। ॐ नमो सव्वसाहुणं मोचके पादयो: शुभे। एसो पंच नमोक्कारो शिला-वज्रमयीतले ।। ४ ।। सव्वपावप्पणासणो वप्रोवज्रमयोबहि:। मंगलाणं च सव्वेंसि खादिरांगारखातिका ।।५।। स्वाहांतं च पदं ज्ञेयं पढमं हवइ मंगलम्। वप्रोपरि वज्रमयं

पिधान देहरक्षणे ॥ ६ ॥ महाप्रभावारक्षेय क्षुद्रोपद्रवनाशिनी। परमेष्ठिपदोद्भूता कथिता पूर्वसूरिभि ॥७॥ यश्चैव कुरुते रक्षा परमेष्ठिपदं. हृदा । तस्य न स्याद्भय व्याधिराधिश्चापि कदाचन ॥८॥

॥ इति आत्मरक्षास्तोत्र समाप्त ॥



## ॥ अथ पचषष्ठियंत्रगर्भितं श्रीचतुर्विंशतिजिनस्तोत्रम् ॥

आदौ नेमिजिन नौमि सभव सुविधि तथा, धर्मनाथ महादेव शान्ति शान्तिकर सदा ॥१॥ अनत सुव्रत भक्त्या नमिनाथ जिनोत्तम । अजितं जितकदर्पं चन्द्र चन्द्रसमप्रभम् ॥ २ ॥ आदिनाथ तथा देव सुपार्श्वविमल

केतुः श्रीमल्लिपार्श्वयोः जन्मलग्ने च राशौ च यदा पीड्यन्ति खेचराः । तदा संपूजयेद्धीमान् खेचरैः सहितान् जिनांन् ।। ७ ।। पुष्पैर्गंधादिभिर्धूपैर्नैवेद्यैः फलसंयुतैः । वर्णसदृशदानैश्च वासोभिर्दक्षिणान्वितैः ।।८।। ॐआदित्यसोममंगलबुधगुरुशुक्रशनैश्चरोराहुः । केतुप्रमुखाः खेटा जिनपतिपुरतोऽवतिष्ठन्तु ।।९।। जिननामकृतोच्चारा देशनक्षत्रवर्णकैः । स्तुताश्च पूजिता भक्त्या ग्रहाः संतु सुखावहः ।।१०।। जिनानामग्रतः स्थित्वा ग्रहाणां तुष्टिहेतवे । नमस्कारशतं भक्त्या जपेदष्टोत्तरं शतम् ।।११।। भद्रबाहुरुवाचेदं पंचमः श्रुतकेवली । विद्याप्रवादतः पूर्वाद् ग्रहशान्तिर्विनिर्मितः ।। १२ ।। इति ।।

## ।। श्री गौतमाष्टकम् ।।

श्रीइन्द्रभूतिर्वसुभूतिपुत्र पृथ्वीभवं गौतमगोत्ररत्नम् । स्तुवन्ति देवा सुरमानवेन्द्रा स गौतमो यच्छतु वाञ्छित मे ।। १ ।। श्रीवर्धमानस्त्रिपदीमवाप्य, मुहूर्तमात्रेण कृतानि येन । अगानि पूर्वाणि चतुर्दशापि स गौ० ।।२।। श्रीवीरनाथेन पुरा प्रणीत, मत्र महानंदसुखाय यस्य । ध्यायन्त्यमी सूरिवरा समग्रा, स गौ० ।।३।। यस्याभिधान मुनयोऽपि सर्वे,गृह्णन्ति भिक्षा भ्रमणस्य काले । मिष्टान्नपानाम्बर पूर्णकामा , स गौ० ।।४।। अष्टापदाद्रौ गगने स्वशक्त्या, ययौ जिनाना पदवदनाय । निशम्य तीर्थातिशय सुरेभ्य स गौ०

।।५।। त्रिपञ्चसंख्याशततापसानां तप:कृशानामपुनर्भवाय । अक्षीणलब्ध्या परमान्नदाता, स गौ० ।।६।। सदक्षिणं भोजनमेव देयं, साधर्मिकं संघसपर्ययेति । कैवल्यवस्त्रं प्रददौ मुनीनां, स गौ० ।।७।। शिवंगते भर्तरि वीरनाथे, युगप्रधानत्वमिहैव मत्वा । पट्टाभिषेको विदधे सुरेन्द्रैः, स गौ० ।। ८ ।। त्रैलोक्यबीजं विज्ञानबीजं परमात्मबीजं परमेष्ठिबीजम् । यन्नाममंत्रं विदधे सुरेन्द्रैः, स गौ० ।। ९ ।। श्रीगौतमस्याष्टकमादरेण प्रबोधकाले मुनिपुंगवा ये । पठन्ति ते सूरिपदं सदैवानन्दं लभन्ते सुतरां क्रमेण ।। १० ।।

।। इति श्रीगौतमाष्टकम् ।।



## ।। अथ गुर्वष्टकम् ।।

नमाम्यहं श्रीजिनदत्तसूरिं गुणाकरं किन्नरपूज्यपादम् । यतीश्वरं तुष्टिकरं स्वरूपं लावण्यगात्रं बहुसौख्यकारम् ।।१।। भूपा नरा ये प्रणमंति नित्यं तेषां मनीषां सफलीकरोति। लक्ष्मीर्यशो राज्यरतिं प्रसूते विद्यावरं श्रीललनासुखानि ।।२।। भक्त्या नरा ये तव पादसेवां कुर्वन्ति सत्पुत्रं लभंत एव । न दुःखदौर्भाग्यभयं न मारिं स्मरंति ये श्रीजिनदत्तसूरिम् ।।३।। कविः स्वबुद्ध्या गुरुसंनिभोपि कस्ते गुणान् वर्णयितुं समर्थः । तथापि त्वद्भक्तिरतो मुनीन्द्र करोमि किंचिद्गुणवर्णनं ते ।। ४ ।। महार्णवे भूधरमस्तकेपि

स्मरंति ये श्रीजिनदत्तसूरिम्। सुखैः सहायांति जनाः स्वधाम्नि ततो भवंतं प्रणमामि कामम् ।। ५ ।। जैनाब्जसंबोधनपूर्णचन्द्रः सत्सेवके कामितकल्पवृक्षः । युगप्रधानं स्तुतसाधुसूरिं सूरीश्वरं श्रीजिनदत्तसूरिम् ।। ६ ।। न रोग-शोका रिपुभूतयक्षा न वा ग्रहा राक्षसदेवः रोषाः न पीडयंते तव नाममंत्रात्तस्मान्नराणां शिवदायकस्त्वम् ।। ७ ।। इदं गुरोरष्टकमुत्तमं यः प्रभातकाले पठते सदैव । किं दुर्लभं तस्य जगत्त्रयेपि सिध्यन्ति सर्वाणि समीहितानी ।। ८ ।।



## ॥ सरस्वती स्तोत्रम् ॥

कलमरालविहंगमवाहना, सितदुकूलविभूषणभूषिता । प्रणतभूमिरुहामृतसारिणी, प्रवरदेहविभाभरधारिणी ॥१॥ अमृतपूर्णकमंडलुधारिणी, त्रिदशदानवमानवसेविता । भगवती परमैव सरस्वती, मम पुनातु सदा नयनाबुजम् ॥२॥ जिनपतिप्रथिताखिलवाङ्मयी, गणधराननमंडपनर्त्तकी । गुरुमुखाबुजखेलनहंसिका, विजयते जगति श्रुतदेवता ॥३॥ अमृतदीधितिबिंबसमाननां, त्रिजगतीजननिर्मितमानना । नवरसामृतवीचिसरस्वती, प्रमुदितं प्रणमामि सरस्वती ॥४॥ विततकेतकपत्रविलोचने, विहितसंसृतिदुष्कृतमोचने ।

धवलपक्षविहंगमलांछिते, जय सरस्वति ! पूरितवांछिते ॥५॥ भवदनुग्रहलेशतरंगिता-स्त्वदुचितं प्रवदंति विपश्चितः। नृपसभासु यतः कमलाबलात्, कुचकलाललनानि वितन्वते ॥ ६ ॥ गतधना अपि हि त्वदनुग्रहात्, कलितकोमलवाक्यसुधोर्म्मयः। चकितबाल-कुरंगविलोचना, जनमनांसि हरंतितरां नराः ॥७॥ करसरोरुहखेलनचंचला, तव विभाति वरा जपमालिका। श्रुतपयोनिधिमध्यविकस्वरो–ज्ज्वलतरंगकलाग्रहसाग्रहा ॥ ८ ॥ द्विरद–केसरि–मारि–भुजंगमा-ऽसहनतस्कर-राज-रुजां भयं। तव गुणावलिगानतरंगिणां, न भविनां भवति श्रुतदेवते ! ॥ ९ ॥

स्रग्धरा—ॐ ह्रीँ क्लीँ ब्लूँ ततः श्रीँ तदनु

हसकल ह्रीमथो ऐं नमोऽन्ते, लक्ष साक्षाज्ज-
पेद् य. किल शुभविधिना सत्तपा ब्रह्मचारी ।
निर्यांतीं चद्रबिंबात् कलयति मनसा त्वा
जगच्चन्द्रिकाभा, सोऽत्यर्थं वह्निकु डे विहित-
घृतहुति स्याद्दशाशेन विद्वान् ॥ १० ॥

शार्दु ल—रे रे लक्षण-काव्य-नाटक-कथा-
चम्पू समालोकने, क्वायासं वितनोषि वालिश[1]
मुधा किं नम्रवक्त्राबुज । भवत्याऽऽराधय
मन्त्रराजमहसा तेनाऽनिश भारतीं, येन त्व
कवितावितानसविताऽद्वैत' प्रबुद्धायसे ॥११॥
चचन्द्र द्रमुखी प्रसिद्धमहिमा स्वच्छदराज्य-
प्रदाऽनायासेन सुरासुरेश्वरगणैरभ्यर्चिता
भावत । देवी सस्तुतवैभवा मलयजा लेपाग-
रागद्युति , सा मा पातु सरस्वती भगवती

त्रैलोक्यसंजीवनी ॥ १२ ॥

द्रुतविलंवित—स्तवनमेतदनेकगुणान्वितं,
पठति यो भविकः प्रमुदा प्रगे ।
स सहसा मधुरैर्वचनामृतै-
र्नृपगणानपि रंजयति स्फुटं ।१३।

॥ इति सरस्वती स्तोत्रम् ॥



## ॥ जिनदत्तसूरिअष्टकम् ॥

सुरकिन्नरवंदितपद्कमलं सकलं समलंकृतभूमितलम् । गतपापमलं चरितैर्विमलं जिनदत्तगुरुं प्रणताविरलम् ॥१॥ भुवनत्रयसारियशःपटलं खलमंडलखंडनतः प्रबलम् । विषमायुधवर्गदलं सरलं जिनदत्तगुरुं प्रणमामि

कलम् ।।२।। विषमस्थलपातिजनोद्धरण शरण महसा भविना शरणम् । हरण तमसाकमलाकरण प्रणमामि गुरु शरण प्रबलम् ।। ३ ।। वरपालितदुष्करसच्चरण जनताचितकीर्तितसच्चरणम् । जितदुर्जयचचलभृतकरण सुगुरु प्रणमामि लसत्करणम् ।। ४ ।। नरपैर्महित मुनिपैर्विनुत प्रमदैरहित क्षमया सहितम् । न परैश्चलित न भयैस्खलितं प्रणमामि गुरु भुवने विदितम् ।। ५ ।। परमागमस्वच्छमति प्रथित रमया ललित सुजनैर्मिलितम् । सरसै कथित रुचिभिर्ललित प्रणमामि गुरु कविभिर्ध्वनितम् ।। ६ ।। भवतापहर शिवशर्मकर धनधान्यभरं कृतमुत्प्रचुरम् । करुणानिलय मुनिप्राग्रहर जिनदत्तगुरुं प्रणमामिवरम् ।७।

वरवाछगमंत्रिसुतं सुपदं कृतवाहडदेणमनः प्रमुदम् । विगतव्यसनं हितदं समुदा मुनिराजमहं प्रणमामि सदा ॥८॥ श्रीमच्छ्रीजिनदत्तसूरिसुगुरोः कल्याणवल्लीतरोर्लब्धेरेकनिधेः सुबुद्धिजलधेर्भाषांनिधेश्चिन्निधेः । प्रत्यूषे विधिना समर्थमुनिना हृब्धं गुरोरष्टकं ये ध्यायन्ति नरा भवन्ति सततं वागीश्वराः श्रीधराः ॥ ६ ॥



## ॥ जिनदत्तसूरिअष्टकम् ॥

श्रीवीरतीर्थेश्वरशासनस्य प्रभावकः कोटिकगच्छनेता । चान्द्रे कुलेऽभूद्वरवज्रशाखः प्रभाकरः श्रीजिनदत्तसूरिः ॥१॥ सदन्बिका-

दत्तयुगप्रधान पदप्रधानोतिशयद्वयुपेत ।
विद्याचरण. सूरिगुणान्वितो यः सूरीश्वरः
सर्वनतो व्यराजत् ।। २ ।। धु धुकाभिधसत्पुरे
समजनि श्रीवाछिगोत्रीसख. । श्रीमद्वाहड-
देव्युदारचरिता तस्याभवद्गेहिनी । तत्कुक्षा-
ववतीर्य हुम्वडकुलोत्तस शिशुत्वेपि यः श्रीमद्-
पाठकधर्मदेवसविधे जग्राह सत् सयमम् ।।३।।
श्रीयुक्ताभयदेवसूरिसुगुरोः शिष्यैर्वराचार्यकैः
श्रीमद्भि किल देवभद्रगुरुभि श्रीचित्रकूटे
स्वय । सूरे श्रीजिनवल्लभस्य सुगुरो पट्टे
निवेश्याऽग्रिमे य श्रीमद् जिनदत्तनामविधिना
श्रीसोमचन्द्राह्वय ।।४।। तत स्वकीयोत्तम-
मूलविद्या त्रिकोटिसख्यस्मरणाद्विशुद्धा । सुरा-
सुराभूरितरायदीयौ पादौ नमन्ति स्म सुहर्ष-

वन्तः ।५। सुसाधुसाध्वीसमुदाययुक्ताः सुश्रावकाणां बहवश्च वर्गाः प्रबोधिता येन कृपापरेणसद्धर्ममार्गप्रथनेन लोके ।। ६ ।। क्रमेण कृत्वानशनं विशुद्धंपुरोत्तमे श्रीअजयादिमेरौ । आयुःक्षये स्वर्गमवाप सम्यक् यः श्रीगुरुर्ज्ञानिसमाहितात्मा ।।७।। इत्थं स्तुतः श्रीजिनदत्तसूरिः क्षमादिकल्याणसुपाठकेन । सूरीश्वरः सर्वगुणाकरोऽसौ भव्यात्मनां वांछितपूर्वको ऽस्तु ।। ८ ।।

।। इति जिनदत्तसूरिअष्टकम् ।।



## ।। अथ कुशलगुरुदेव-स्तुति ।।

सुखं सर्वा संपद् वसति पदयोर्यस्य वदने
विनिद्रावागीशा हृदयकमले संविदधिकम् ।

विराग. सर्वाङ्गेष्वपि च भगवद्भक्तिरनिशम् समृद्धचर्थं वदे कुशलगुरुदेवस्य चरणौ ॥१॥ निशि स्वापाधीन निशिदिनमधीनौ समयीना पर वाणीलक्ष्म्योर्निलयमपि तद्दाननिपुणौ । सदा यौ वर्तेते जयत इव पाथोजयुगल, समृद्धचर्थं० ॥२॥ क्षिपतौ तौ प्रेक्षा सरसिरुहयोर्यो मृदुलयोर्जपापुष्पाभासो किशलयजिताशेषमहसो । लसल्लेखालक्ष्मप्रकटितपरा श्रीसदनयो समृद्धचर्थं वदे० ॥३॥ सुरेभ्य स्वस्थेभ्य' कतिपयदिनैर्य फलमथो कदाचिद्दत्तेद्राक्श्रियमपि दरिद्रायपरमाम् । सुरद्रु त्यक्त्वोपासत इति बुधौ यौ भुवि गतौ, समृद्धचर्थं वदे० ॥ ४ ॥ सुरैरास्वाद्यते परमगुरुधर्मोपदिशत , सदा काम पीतामृतरसवराशै-

रपि गिर: । श्रुता यस्य श्रेय: श्रियमपि दिशंति स्थिरधियां, समृद्धयर्थ वंदे० ॥५॥ निधिस्सर्वश्रीणामनधिकरणौ सर्वविपदाम्, मृदुस्निग्धौ शोणावुपचितनखौ गूढघुटिकौ । समानौ प्रोत्तुंगप्रपदपदशाखाविलसतौ, समृद्धयर्थं वंदे० ॥६॥ ययोरर्चा सूते धनसुखधराधामरमणी: । शरीरारोग्यत्वं विनयनयविद्यानिपुणताम् । गुणानौदार्यादीनपि तनयलक्ष्मी: श्रितनृणां, समृद्धयर्थ वंदे० ॥७॥ भयंकारागारामयसमरपारीन्द्रफणभृ–न्महापारावारो द्विरदवनवैश्वानरभवम् । न डाकिन्याद्युग्रग्रहगरलजं यत्स्मरणत: समृद्धयर्थ वंदे ॥ ८ ॥ इत्थं श्रीजिनपद्मसूरिरचितं दिव्याष्टकं सद्गुरो:। पुण्यं मंत्रमयं मनोज्ञफलदं पापौघविध्वं-

सनम् । भक्त्या य पठति प्रभातसमये सर्वत्र तस्य ध्रुव, वश्या भूपतयो भवति सतत लक्ष्मीश्चिरस्थायिनी ।। ९ ।।

।। इति समाप्तम् ।।



## ।। कुशलसूरि-गुरोरष्टकम् ।।

पद्मा कल्याणविद्या कमलपरिमलस्फूर्ति-भानुप्रकाश । प्रीतिस्फीत्याभिनुत्यक्रमकमल-मिलन् मानवा मर्त्यनागे ।। प्रौढाचार्यविली-भि सदतिशयकृते ध्येयज्ञेय स्वभाव। स्त्राता-देरावरे श्रीजिनकुशलगुरोस्तूपरूपप्रसाद ।१। सघे ग्रामे पुरे वा सकलजनपदे राजवर्गे कुटु-म्बे । गच्छे सघाटके वा प्रमुदितमनसा वासरे

वा निशायाम् ।। यन्नाम स्मर्यमाणं भवति भयहरं सर्वसंपत्तिकारी। श्रीमान्शान्तप्रतापी जिनकुशलगुरुर्नत्वदन्योऽस्ति लोके ।। २ ।। सर्वक्ष्मापालमालापरिषद् विबुधश्रेणिवेणीसभायां। वादव्याख्यानगोष्ठीसुललितवचनाव्यासत्रिव्यासजन्यम्।। सौभाग्यं त्वत्प्रसादाद्विमलशशिकलाकान्तिकीर्तिर्यदस्मात्। त्रैलोक्यख्यातिसूरिर्जिनकुशलगुरो वांछितं मे प्रदेहि ।। ३ ।। सामर्थ्यं सर्वशास्त्रे स्ववचनपटुतां तार्किकत्वं कवित्वम्। निष्णातः शब्दशास्त्रे समयनिपुणतां चारुनैमित्तिकत्वम् ।। ईहध्वे जागरूकं यदि महिमकरीं निर्मलां सर्वविद्याम्। सेवध्वं तत्त्रिशुध्या जिनकुशलगुरुं कामिते कल्पवृक्षम् ।।४।। अंगे वंगे कलिंगे मगधजन-

पदे गुर्ज्जरे मालवे वा । सौराष्ट्रे मेद पाटे मरुषु किमपर भूर्भुव स्वस्त्रयेपि ।। ग्रीष्मे निर्नीरदेशे ललितवितरणाभीष्टदानप्रसूतान् । कीर्तिस्ते विस्तरती जिनकुशलगुरो । पावयत्येव विश्वम् ।। ५ ।। सिद्धि स्वपाणिपद्मे विलसति हि यया स्वान्यसौख्योदयः स्याद्भाले सौभाग्यलक्ष्मीरधिवसति ययोत्सर्पति श्रीरभीष्टा ।। बुद्धि सा कापि चित्ते स्फुटति किल यया क्ष्ण्यते सर्वदा त्व । त्वद्भक्ताना नराणा जिनकुशलगुरो दुर्लभ नैव किंचित् ।। ६ ।। वार्द्धौ वायुप्रवेगप्रजनितवहनोत्पातसपातमध्ये ज्वालाजिह्वे कराले ज्वलति चयरतस्तस्करोपद्रवे वा ।। क्ष्मापाले क्रोधरुद्धे हरिकरिभुजगाभोगरोगादियोगे । ध्यायति त्वत्प्रभाव

जिनकुशल गुरो नैव कष्टं लभन्ते ।।७।। सूरीन्द्रश्रीसुधर्म्मप्रभुपदविततााचार्यवर्यानुधुर्या । मासाद्योद्यत्प्रभावो विशदखरतरश्लाघ्यगच्छेश्वरत्वं । सम्यग्ज्ञानक्रियाभ्यां जिनमतमतुलं प्रौढमारूप्य रूपाम् । प्राप्तस्वर्गश्रियं श्रीजिनकुशलगुरुर्वाञ्छितं वः पिपर्तु : ।।८।। श्रीजिनकुशलगुरूणामष्टकमिष्टसिद्धबुधिकरं। यःपठति गुणात्सततं सः स्याद्भोक्ता च वक्ता च ।।९।।

।। इति ।।



## ।। सरस्वती-प्रथम-स्तोत्रम् ।

नमस्ते शारदादेवि काश्मीरप्रतिवासिनि ।
त्वामहं प्रार्थये मातर्विद्यादानं प्रदेहि मे ।।१।।

सरस्वती मया दृष्टा देवी कमललोचना ।
हंसस्कंधसमारूढा वीणापुस्तकधारिणी ।२।
सरस्वतीप्रसादेन काव्यं कुर्वन्ति पण्डिताः ।
तस्मान्निश्चलभावेन पूजनीया सरस्वती ।३।
प्रथमा भारतीनाम्नी द्वितीया च सरस्वती ।
तृतीया शारदादेवी चतुर्थीहंसवाहिनी ।।४।।
पंचमी जगद्विख्याता षष्ठी वागीश्वरी तथा ।
कुमारी सप्तमी प्रोक्ता अष्टमी ब्रह्मचारिणी
।५। नवमी त्रिपुरादेवी दशमी ब्राह्मणीसुता ।
एकादशी तु ब्रह्माणी ।। ६ ।। द्वादशी ब्रह्म-
वादिनी वाणी त्रयोदशी नाम भाषा चैव
चतुर्दशी । पंचदशी श्रुतादेवी षोडशी श्रीर्नि-
गद्यते ।। ७ ।। एतानि षोडशनामानि प्रात-
रुत्थाय- य पठेत् । तस्य संतुष्यते देवी शारदा

वरदायिनी ॥८॥ या कुंदेन्दुतुषारहारधवला या चन्द्रबिंबानना । या त्रैलोक्यविभूषणा भगवती या राजहंसप्रिया । या पद्मोदलनेत्र-पद्मयुगला या जातिपुष्पप्रिया । सा नक्षत्र-ललाटपट्टतिलका सा शारदा पातु माम् ॥९॥
या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना, या वीणावरदंडमंडितकरा या शुभ्रवस्त्रा-वृता । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता, सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥१०॥



## ॥ सरस्वतीस्तोत्रम् ॥

त्वं शारदा देवि समस्त शारदा विचित्ररूपा बहुवर्णसंयुता। स्फुरन्ति लोकेषु तवैव सूक्तय सुधास्वरूपा वचसा महोर्म्मय. ॥१॥ भवद्विलोलम्बकदर्शनादहो मन्दोपि शीघ्रं कविरेव जायते। तवैव महात्म्यमखण्डमीक्ष्यते तवार्थवादः पुनरेव गीयते ॥२॥ कर्पूरनीहारकरोज्वलो तनुर्विभाति ते भारति शुक्लनीरजे। कराग्रभागे धृतचारुपुस्तका डिण्डीरहीरामलशुभ्रचीवरा ॥ ३ ॥ मरालबालामलवामवाहना स्वहस्तविन्यस्त विशालकच्छपी। ललाटपट्टे कृतहेमशेखरा सन्ना प्रसन्ना भवतात्सरस्वती ॥४॥ सद्विद्याजलराशिता-

रणतरी सद्रूपविद्याधरी । जाड्यध्वान्तहरी सुधाब्धिलहरी श्रेयस्करी सुन्दरी ।। सत्या त्वं भुवनेश्वरी शिवपुरी सूर्यप्रभाजित्वरी ।। स्वेच्छादानवितानिर्जरगवी सन्तापतांछित्वरी ।५। सुरनरसुसेव्या सेवकेनापि सेव्या । भवति यदि भवत्या किं कृपा कामगव्या ।। जगति सकल सूर्यस्त्वत्समान नभव्या । रुचिरसकलविद्या दायिका त्वं तुनव्या ।।६।। यो भक्त्या सुरितो नवीति सततं जघ्नन्ति सौख्यं महत्त्वत्सेवा च चरीकरीति तरसा बोभोति संश्रेयसाम् ।। त्वं मातर्हरिधत्ति चेतसि निजे दर्द्रष्टिरोचिर्म्मयम् । तस्याग्रे नरिनर्ति योजितकरो भूपो नटीवत्स्वयम् ।७। आख्यातुं तव देवि ! कोपि न विभुर्माहात्म्य-

मामूलतो, नो ब्रह्मा न च शंकरो नहि हरिर्नो जावर्पति स्वर्प्यंति । त्वच्छक्तिर्वरिर्वाति विश्वजननी लोकत्रयव्यापिनी । सा त्वं काचिदगम्यरम्यहृदया वाग्वादिनी पाहिमाम् ॥८॥ स्तोत्र पठेद्य. श्रुतदेवताया । भक्त्यायुतः शुद्धमना प्रभाते ॥ विद्याविलास विपुल प्रकाश, प्राप्नोति पूर्ण कमलानिवासम् ॥९॥

॥ इति वाग्देव्या स्तोत्रम ॥



सकललोकसुसेवितपत्कजा वरयशोजितशारदकौमुदी । निखिलकल्मषनाशनतत्परा जयतु सा जगता जननी सदा ॥१॥ कमलगर्भविराजितभूघना मणिकिरीटसुशोभितमस्तका । कनककुण्डलभूषितकर्णिका । जय०

।। २ ।। वसुहरिद्गजसंस्नपितेश्वरी विधृत-सोमकला जगदीश्वरी । जलजपत्र समान-विलोचना । जय० ।।३।। निजसुधैर्यजिता-मरभूधरा निहितपुष्करवृंदलसत्करा । समु-दितार्कसुहृत्तनुवल्लिका । जय० ।४। विविध-वांछितकामदुघाद्भुता, विशदपद्महृदान्तर-वासिनी । सुमतिसागरवर्धनचन्द्रिका । जय० ।।५।। इति श्वेतपद्मासनादेवी श्वेतपुष्पाभि-शोभिता । श्वेताम्बरधरा नित्यं श्वेतगंधानु-लेपना ।।१।। श्वेताक्षी शुक्लवस्त्रा च श्वेत-चंदनचर्चिता । वरदा सिद्धगंधर्वशशिभि स्तूयसे सदा ।। २ ।। स्तोत्रेण च तथा देवी गीर्धात्री च सरस्वती ये पठन्ति त्रिकालं च सर्वविद्यां लभन्ति ते ।। ३ ।। इति ।।

## ।। श्री शारदाऽष्टकम् ।।

चन्द्रानने ! नमस्तुभ्य वाग्वादिनि ! सरस्वति ! मूढत्व हर मे मात ! शारदे ! वरदा भव ।१। दिव्याम्बरसुशोभाढ्ये ! हससत्पक्षवाहिनी । ज्ञान मनोज्ञ मे देहि सौख्य यच्छ सुरेश्वरि ! ।।२।। कर्णावतससंयुक्ते ! हस्तप्रस्तुतपुस्तके ! तुम्बीफलकराऽऽयुक्ते सद्वीणावाद्यवादिके ।।३।। विकचीकुरु मेधा मे जाड्यध्वान्तमपाकुरु। विशालाक्षीं पद्ममुखीं भारतीं प्रणमाम्यहम् ।।४।। वाचस्पतिस्तुते देवि ! गाढाज्ञानप्रणाशिनि ! मा नित्यं कल्मषात् पाहि विद्यासिद्धये च मे भव ।।५।। ब्रह्माणी विश्वविख्यातां प्रसन्ना ब्रह्मचारिणी । वाक्-

शुद्धि कुरु मे मात: ! यया कीर्ति लभेत्तराम् ।।६।। ॐ ह्रीं श्रीं क्लीं ऐं नमोऽन्ते महामन्त्र-स्वरूपिणी । एकाग्रचेतसा ध्यात्रै त्रिपुरा परितुष्यति ।।७।। द्विसहस्रशराब्देऽदोऽलेखि ब्राह्म्यष्टकं मया । पठेन्नित्यं त्रिसन्ध्यं यो भोक्ता वक्ता भवेच्चस: ।८। इत्थं मनो-वचन-काय-विशुद्ध भावा:, पुण्यश्रियं श्रुत-सुवर्ण-मयां स्तुवन्ति-ज्ञान–प्रधान-पद–साधन-साव-धानां-कल्याण-कोटि-कलितां कमलां लभन्ते ।। ९ ।।



## ॥ श्रीगुरु स्तोत्रम् ॥

यथा प्राणा नराधारास्तथैव सुखसागर ॥ नित्य नमामि नाथ त्वा त्वमेव शरणं मम ॥१॥ चखान दुष्टकर्माणि दिव्यज्ञानदिवाकर. । चारित्ररत्नभण्डारदर्शन विमल कृतम् ॥ २ ॥ दानशीलतपोभाव श्रष्टमातृपरायण श्रावालब्रह्मचारी च भाविता भावना सदा ॥३॥ कपायमदनिद्रादि पञ्चेन्द्रियाण्यशेपत । जितानि हास्यजिन्न न वैरिणी विकयाजिता ॥४॥ निर्जितोकाममोहो च रागद्वेपविवर्जित । धौत सकलमिथ्यात्व सम्यक्त्वरागरजित ॥५। नयनिक्षेपमवेत्ता गुणस्थान विशेपत । विजानासि

गुणग्राहिन् ! स्याद्वादञ्च महारसम् ॥ ६ ॥ पवित्रनामजापेन ज्ञानादिसकलं फलं लभन्ते सर्वधीमन्तो नैवात्र कोपि संशयः ।७। त्वमेव प्राणकाधारस्त्वमेव हितकारकः । त्वमेव सुखसौन्दर्यस्त्वमेव भवतारकः ॥८॥ त्रैलोक्यसिंधोर्भवतापहर्तु र्गु रोः प्रसादप्रभुतांकितांतः। तस्यैव सानन्दसुखाम्बुराशेः पादौ सदानन्दरसेन नौमि ॥ ६ ॥



## उवसग्गहरं महाप्रभाविक बृहद् स्तोत्रम्

उवसग्गहरं पासं,-पासंवंदामि कम्मघरण-मुक्कं । विसहर विस जिन्नासं, मंगल कल्लाण आवासं ॥१॥ विसहर फुलिंलग मंतं, कंठे धारेइ जो

सया मणुश्रो । तस्स गहरोगमारी, दुठ्ठ जरा जति उवसाम ॥२॥ चिठ्ठउ दूरे मतो तुज्झ, पणामोवि बहुफलो होई । नरतिरिये सुवि जीवा, पावति न दुक्ख दोहग्ग ॥३॥ ॐ अमरतरु कामधेणु, चिंतामणि कामकुम्भ माइया । सिरिपास नाह सेवा. गहाण सव्वेवि दासत्तम् ॥४॥ ॐ ह्री श्रीँ ऐँ तुह दसणेण सामिय, पणासेइ रोग सोग दुक्ख दोहग्ग । कप्पतरुमिव जायइ, ॐ तुह दंसणेण सव्व-फलहेउ स्वाहा ॥५॥ ॐ ह्री नमिउण विग्घ-नासय, मायाबीएण धरण नागिंद । सिरि कामराज कलिय, पासजिणद नमसामि ॥६॥ ॐ ह्रीँ श्रीँ सिरि पास विसहर, विज्जामतेण झाण झाएज्जा । धरण पउमाइ देवी, ॐ

जवेइ सुद्धमणेणं। पावइ इच्छियं सुहं, ॐ ह्रीं श्रीं क्ष्म्ल्व्र्यूं स्वाहा ॥१९॥ ॐ रोग जल जलण विसहर, चौरारि मईद गय रण भयाइं। पास जिण नाम संकित्तणेण, पसमंति सव्वाई ह्रीँ स्वाहा ॥२०॥ ॐ जयउ धरणिंद नमंसिय, पउमावइ पमुह निसेविय पाया। ॐ क्लीं ह्रीं महासिद्धि करेइ पास जगनाहो ॥२१॥ ॐ ह्रीं श्रीं तं नमः पासनाहं, ॐ ह्रीं श्रीं धरणेन्द्र नमंसियं दुहविणासं। ॐ ह्रीं श्रीं जस्स पभावेण सया, ॐ ह्रीं श्रीं नासंति उवद्दवा बहवे ॥२२॥ ॐ ह्रीं श्रीं पइ समरंताण मणे, ॐ ह्रीं श्रीं न होइ वाहि न तं महा दुक्खं। ॐ ह्रीं श्रीं नामंपि हि मंतसमं, ॐ ह्रीं श्रीं पयडं नत्थीत्थ

सदेहो ॥२३॥ ॐ ह्लीं श्रीं जल जलण भय, तह सप्पसिह, ॐ ह्लीं श्रीं चोरारि सभवे खिप्प । ॐ ह्लीं श्रीं जो समरेइ पास पहुँ, ॐ ह्लीं क्लीं पुहविक्याविं किं तस्स ॥२४॥ ॐ ह्लीं श्रीं क्लीं ह्लीं इह लोगट्ठी परलोगट्ठी, ॐ ह्लीं श्रीं जो समरेइ पासनाह, ॐ ह्लां ह्लीं ह्लूं ह्लः गां गीं गुं गें, त तह सिज्झइ खिप्प ।२५। इह नाह स्मरह भगवंत, ॐ ह्लीं श्रीं क्लीं ग्रां ग्रीं ग्रुं ग्रें क्लीं ब्लीं, श्री कलि कुंड स्वामिने नम ।२६। इह सथुओ महायस, भत्तिब्भर निब्भरेण हियएण । ता देव दिज्ज बोहिं, भवे-भवे पास जिणचद ॥२७॥

॥ ॐ शाति ॥ ॐ शांति ॥ ॐ शांति ॥



।।४।। दीव्यस्तुवर्णांश्रियमेव लोक-प्रबोध-हेतुं स्वपदाश्रितां या । प्रकुर्वतीं तां सुधियां समन्तात् पुण्यश्रियं नौमि गुरुं गुरूणाम् ।५। इत्थं-प्रवर्तक-पदं दधतीं सुपूज्यां पुण्य श्रियं गुरु-गुरुं ये स्तुवन्ति भक्त्या । पुण्यश्रियं वर-विलासयुता जनास्ते कल्याणकोटि-कलितां कमलां लभन्ते ।।६।।



## ॥ श्रीगौडीपार्श्वनाथवृद्धस्तवनम् ॥

दोहा । वाणी ब्रह्मावादिनी, जाणेजग-विख्यात । पासतणा गुणगावता मुज मुख वसज्यो मात ॥ १ ॥ नारगें अणहलपुरें, अहमदावादे पास । गौडीनो धणी जागतो, सहुनी पूरे आस ॥२॥ सुभ वेला सुभ दिन घडी मुहुरत एक मंडाण । प्रतिमा ते इह पासनी, थई प्रतिष्ठा जाण ॥३॥ (ढाल) गुणहि विशाला मंगलीक माला, वामानो सुत साचोजी । धण कण कचण मणि माणक दे, गौडीनो धणी जाचोजी (गु०) ॥४॥ अणहिलपुर पाटण मांहे प्रतिमा, तुरक तणे घर हुतीजी । अश्वनी भूमि अश्वनी

पीडा, अश्वनी वाल विगूती जी (गु०)।।५।। जागंतो जक्ष जेहनै कहियै, सुहणो तुरकनैं आपे जी। पास जिनेसर केरी प्रतिमा, सेवक तुझ संतापे जी (गु०)।।६।। ग्रह ऊठीने परगट करजे, मेघा गोठी ने देजे जी ! अधिको म लेजे ओछो म लेजे, टका पांचसै लेजे जी (गु०) ।।७।। नहिं आपिस तो मारीस मुरडोस, मोर बंध बंधास्ये जी। पुत्र कलत्र धन हय हाथी तुझ, लछि घणी घर जास्यै जी (गु०) ।।८।। मारग पहिलो तुझनें मिलस्यै, सारथ वाह जे गोठी जी। निलवट टीलो चोखा चेड्यो, वस्तु वहै तसु पोठी जी (गु०) ।।९।। (दूहा)।। मनसु वीहतो तुरकडो, मानें वचन प्रमाण ! बीबी नें सुहणा तणो, संभ-

